Panchakshari Press, Brodiepet, Guntur.



1999



"లవఙ్గీ" నాటకానికి

అమూల్యాభిప్రాయముల నొసగిన

శ్రీయుత విద్వాన్ శేషాచలశర్మ

శ్రీమతి మీరాచక్రవర్తి గారలకు

కృతజ్ఞతలు.

Price Rs. 45/-

For Copies :-

SHREE M. CHANDRA SEKHARA RAO
Sri Rajadhani Residential School
Nizampet, Kakutpalli,
Hyderabad.

**Shree B. G. Satyanarayana,**
Seshasayana Appartments, Flat No. 1
43-14, Masti Venkatesam Iyyangar St,
Gavipuram Extn. Bangalore-560019.
Karnataka, India.

# लवङ्गी

**LAVANGEE**

(Playlet in Sanakrit)



प्रकाशकः

श्री मक्कपाटि चन्द्रशेखर राव्

व्यवस्थापक अध्यक्षः

श्री राजधानी रेसिडेन्सियल् स्कूल्, निजांपेट, कुकट्पल्ली, हैदराबाद्

पञ्चमुखी एण्टर्प्रैजस्, हैदराबाद्

महिळा फैनान्स् कार्पोरेषन्, हैदराबाद्

श्री मक्कपाटि वीरम्म नारायण फौण्डेषन, हैदराबाद्

रचयिता

क्षेमेन्द्रः

Phone. : Offi 3214001 Extn. 236

# BANGALORE UNIVERSITY

**Department of Sanskrit**

**Dr. MEERA CHAKRAVARTHY**
Professor and Chairperson

Jnana Bharathi
Bangalore-560 056
Date : 19-1-1999

Rarely does one encounter straight forward, simple but impressive engagement with selfearned scholarship as Pt· Kshemendra's, 'Padmavathi', 'Lavangi' and his other writings are enough evidence to show his hidden talents. Lavangi is an example of fine sensibility. The language is simple and enjoyable His style is original but textually grounded. His rich understanding of the complexites of Sanskrit tradition and his willingness to propose them in lucid style has earned him a good reputation.

I wish, it will be of lasting importance.

**MEERA CHAKRAVORTHY**
Professor and Chairman
Department of Sanskrit
Bangalore University
Bangalore-560 056

# ॥ प्ररोचना वचनम् ॥

तैलिङ्गदेशे प्राप्तजनिः पाण्डित्येन प्रतिभया च दिल्लीश्वरषाजहान-सभां भूषयित्वा पण्डितराजप्रशस्तिसम्पन्नः कविसम्राट् काव्यमीमांसाचक्रवर्ती जगन्नाथपण्डितनरेन्द्रः निजवैदुष्येण समग्र भारतदेशं शोभयामास। तस्य विषये यवनस्त्रीसंसर्गवशात् प्रचलितायाः अपकीर्तेः याथार्थं निश्चेतुं न शक्यते। अयं च जगन्नाथ विषये मिथ्यापवाद इति बहवः किलाभिप्रयन्ति। यथाकथंचि दस्तु। किन्तु जगन्नाथादनन्तरं जातः कोऽपि काव्यमीमांसकः नातिशेते जगन्नाथमिति काव्यमीमांसाजगन्नाथ एव जगन्नाथ इति नास्त्यत्र विवादलेशस्याप्यवसरः। काव्यतत्त्वसूक्ष्मेक्षिकायां सुमधुरमनोहारिकाव्यनिर्माणे च पण्डितराजस्य कृतिरत्नान्येव निदर्शनानीति नाधिकं तत्र कीर्तनीयमस्ति।

जगन्नाथपण्डितवरस्य लवङ्गीसम्बन्धमेव वस्तु स्वीकृत्य क्षेमेन्द्रोप-नामानः दीक्षितुलुमहाभागाः "लवङ्गी - नाम्नीं" लघुनाटिकां सरलया मधुरया च शैल्या विरचितवन्तः। सम्पूर्णं रूपकमिदं तैः मम निकटे वैखरीविषयीकृतं साक्षादहं श्रुतवान् कविं कविकृतिं च सन्तोषातिशयेन प्रशंसावचनैः सम्भावयामि। सरलसंस्कृतभाषया निबद्धं रूपकमिदं सुचारु अभिनययोग्यं वरीवर्ति अवश्यमेव सहृदयमनांसि रञ्जयति।

विंशत्याधिकानि गद्यपद्यरूपकाणि विरचय्य सुरभारतीसेवायां बद्धादराः दीक्षितमहाभागाः सर्वथा महाजनसमादरपात्रतां प्राप्नुवन्तु इति प्रसन्नेन चेतसा आशंसावचनानि व्याहरामीति शम्।

बेङ्गलूरु
दिनाङ्कः - 9-3-1999

विद्वान् शेषाचलशर्मा
निवृत्तसंस्कृतप्राध्यापकः

# మా మాట

మా వాడు G. S. N. కి "కాదంబరి" నాటకాన్ని ఇచ్చాను హైదరాబాద్‌లో. మా సంస్థ ద్వారా ఒక నాటకాన్ని ముద్రించే విషయం తెలుసుకుంటాను అని అన్నాడు.

మాటవరస కన్నాడని అనుకున్నాను.

తరువాత నన్ను శ్రీ చంద్రశేఖరరావు గారివద్దకు తీసుకు వెళ్ళాడు. ఒక పావుగంటలో వారు చెక్కు చేతికిచ్చారు. "లవఙ్గీ" నాటకాన్ని ముద్రణ చేయించటానికి అని.

కథలో చదివింది, కలలో చూచింది నిజమయినట్టు అనిపించింది నాకు.

దొడ్డబుద్ధిగలవారీ వెలమదొరవారనటానికి, ఇదే నిదర్శనం.

ఆ చంద్రశేఖరుని జటలమధ్య ఠీవిగా కూర్చొని తన కిరణాలతో లోకానికి చల్లదనాన్ని అందించే ఆ చందమామ, "ఈ చంద్రశేఖరుణ్ణికూడ చల్లని చూపులతో చూడాలి" అని మనసారా కోరుకుంటూ

క్షేమేంద్ర

రేడియోలో ప్రసారమయిన "లవఙ్గీ" నాటకం క్యాసెట్ మావద్ద ఉన్నది.

ఈ "క్షేమేంద్ర" ఆ క్షేమేంద్ర కవిని అనుకరించటం కాదనీ ప్రజాక్షేమంకోసం చేసేపనులకు గుర్తుగా మాత్రమేననీ చదువరులు గుర్తించాలి. అందుకు "మొగ్గ" ప్రజాహిత మాసపత్రికయే నిదర్శనం.

॥ श्रीमत् कविता कलायै नमः ॥

# लवङ्गी

"क्षेमेन्द्रः"

( संस्कृत नाटिका )

आकाशवाण्यां प्रसारिता चाऽऽम्रेडिता

"मन्मथाय नमस्तस्मै यस्याऽऽयतन मङ्गना" वात्स्यायनः

द्द्या त्स काल पुरुष प्रवर श्शुभं वः

नान्दी

( जगन्नाथस्य गृहम् )

शिष्यः - (प्रविश्य) गुरुदेव ! यवनकुल मणिः कश्चि द्विद्वन्मणि रागतोऽस्ति "दिल्ली" नगरात् ।

जगन्नाथः - किं नामधेय स्सः ?

शिष्यः - "काजी" कवि रिति बदन्ति किल !

जगन्नाथः - (औत्सुक्येन) अय मह मय मह मागच्छाम्याऽगच्छामि । ताव दुचितेऽऽनातिथेय सत्कारेण सुखाऽऽसीनं कुरु तम् ।

शिष्यः - यथाऽऽज्ञापयति गुरुदेवः ।

... ... ... ...

**जगन्नाथः** - (प्रविश्य) स्वागत मतिथये ।

काजीकविः - (उत्थाय) धन्योऽह मस्मि महाकवि सन्दर्शनेन।

**जगन्नाथः** - उपविशतु भवान् (उभा वप्युपविशतः)

काजीकविः - अह मस्मि देहळ्यां धर्मवर्तिनः "षाजहान" चक्रवर्तिनो राजाऽऽस्थाने "यवन" भाषा पीठे प्रधानाऽऽचार्य ।

**जगन्नाथः** - समीचीन मस्ति ।

काजीकविः - अलङ्कार शास्त्रस्य पारदृश्वेति, अत एवाऽलङ्कारशास्त्रस्याऽलङ्कारप्रायं कमपि सलक्षणं ग्रन्थं रचितवान् भवानिति च, श्रुतिः ।

**जगन्नाथः** - (अगर्वितः) भवतु, नाम ।

काजीकविः - "रस" निरूपण विषये संशयाऽऽविष्टोऽह मागतोऽत्र ।

**जगन्नाथः** - कथ मिव ?

काजीकविः - एव मिव, "अष्टावेव रसा नाट्ये न, "शान्त 'स्तत्र युज्यते' इति कमप्याऽऽलङ्कारिकं वादं समर्थयाम्यहम् । त दधिकृत्य किं भणति भवान् ।

**जगन्नाथः** - (किञ्चिदिवाऽऽलोच्य) केषांचि दुक्ति स्सा । वयं पुनः "श्रृङ्गारः करुण श्शान्त" इति लक्षण मनुसृत्य "रस" निरूपणे प्रचुरप्रचारं वादं समर्थयामः ।

तत्रभवा नभिनवगुप्तपाद श्चाऽङ्गीकृतवा निमं वादं हेतुबद्ध मिति मत्वा ।

काजीकविः - कथ मिदं सम्भवति ? शम रसस्य, (पोषणे) अभिनये नटो भवति खलु । अशक्तो रङ्गस्थले ।

जगन्नाथः - नटे "शमाऽभाव" इति हेतु रसङ्गतः । समर्थो नटो भवति शम मपि रसबुध्या पोषयितुं तोषयितुं च सामाजिकान् ।
अपि च, सङ्गीतरत्नाकरे ।

श्लो॥ अष्टा वेव रसा नाट्ये । इति केचि दचूचुदन् ।
त, दचारु यतः कश्चि । न्न रसं स्वदते नटः ॥

इत्याऽऽदिना "शान्तोऽपि नवमो रस" इति संस्थापितः ।

अत एव 'अष्टौ नाट्ये रसा स्मृता' इत्युपक्रम्य, पुन र्भरताचार्य मत मवलम्ब्य ... तत्र भवान् मम्मटभट्टोऽपि "नवमो रसो'ऽस्तीति सिद्धान्तीकृतवान् ।

अतो वय मसंशयं रसबुध्या स्वीकुर्म श्शान्त मपि ।
'सर्वप्रकारै स्सन्तुष्टमानसः प्राप्नोति मुक्ति चरमे शान्ते वैव *रसेन सः ।"

इत्यप्रस्तुताऽपि जन सामन्यसूक्ति रप्यत्र भवति परिगणनीया ।

काजीकविः - युज्यते । संशयच्छेदी भवदीयः पाण्डित्य प्रकर्षः । इदानी मह मङ्गीकरोमि "रसा नव "इति । भवतु नाम, निवर्ते पुनर्दर्शनाऽपेक्षया ।
यते च, यथासमयं विशदीकर्तुं चक्रवर्तिने भवदीय मनितरसाध्यं रस निरूपण निर्देश विशेषं प्रति ।

जगन्नाथः - (किञ्चिदिव कुतुकितः) स धर्मप्रभु रिति श्रुतिः ?

काजीकविः - अथ किम् ? (पदचलनम् )

जगन्नाथः - भवतु भवदीयं गमन मनर्गळम् ।

( किञ्चिद् दूर मनुसृत्य निवर्तते )

(यवनिकायाः पातन मुत्थापनं च ।)

# 2

भटः - (उच्चैः) निज भुजाऽर्जित दिगन्त विश्रान्त कीर्तिः षाजहान चक्रवर्ती प्रविशति मञ्जीर मन्दिरम् ।

सभास्ताराः - जयतु जयतु चक्रवर्ती !

(चक्रवर्ती समुपविशति सिंहासने सभ्याश्च)

काजीवविः - (उत्थाय) अद्य, अपूर्वेण संरम्भेणोपेतोऽयं सभा प्रारम्भः...

अस्ति, आन्ध्रेषु गोदावरी वारिणा पवित्रीकृतो "मुङ्गण्ड" इत्यग्रहारः ।

तद् ग्रामवासी "वेगिनाडि" शाखीयो जगन्नाथ इति विश्रुतो विद्वत्कवि रद्याऽत्र समागतोऽस्ति । (हस्तेन दर्शयन् जगन्नाथम् ) कवि रयं न्याय मीमांसाऽदि दर्शनेषु पारङ्गत स्स्वय मलङ्कार ग्रन्थस्य च कर्ता ।

(उपरि विलोक्य) इदानी मत्र सर्वा मतिक्रम्य विशेषा, नट्टालिकाया मन्तःपुर सञ्चारयोग्या वनिता जनता यवनिका मन्तरीकृत्य सह महाराज्ञ्या स्थिता सभां विलोकयती त्याऽऽनन्द-दायक स्सन्दर्भः ।

(आगत्य पुष्पमालाऽलंकृतं करोति जगन्नाथम् )

जगन्नाथः - (उत्थाय) हस्त मुद्यम्य)

भो ! देहळीमहाराज ! जयीभव विजयी भव ।

श्लो॥ दिल्लीश्वरो वा ! जगदीश्वरो वा ?
मनोरथान् पूरयितुं समर्थः

अन्येन केनाऽपि नृपेण दत्तं
शाकाय वा ? स्या ल्लवणाय वा ? स्यात् ॥

(जगन्नाथस्य विलक्षण माकारं दृष्ट्वा शङ्खध्वनिगभीरं गळरवं च श्रुत्वा भवन्ति सभ्या विस्मयोपेताः)

षाजहानः - कवे ! द्राक्षापाक पक्षपातिनो वयम् ।

जगन्नाथः - तथाहि ! चक्रवर्तिन् !

श्लो॥ किंवा ! कवितया राजन् ! किंवा? वनितया तया
पद विन्यासमात्रेण मनोनाऽपहृतं यया ॥

सा पदकलने पदगुम्फन एव परवशं करोति नायकं या, भवति पुष्प (मयी) सदृशीं शय्या मधिगता ।

षाजहानः - य दस्म न्मनसि ...

काजीकविः - (अनुपदमेव) तदेवाऽभिहितं कविना । पुन रपरो विशेषोऽस्ति कविकुमारेऽस्मिन् ।

षाजहानः - कथ मिव ?

काजीकविः - देव ! साधारणतया कविवरा स्स्वकीयं कविता वैदुष्यं परेषा मुदाहरणेन कुर्वन्ति समन्वयम् । किंतु, कविराजहंसोऽयम्....

षाजहानः - काव्यलक्षणं सोदाहरणं कृतवा निति खलु !

काजीकविः - यथा भावयति चक्रवर्ती ।

जगन्नाथः - प्रभो !

श्लो॥ निर्माय नूतन मुदाहरणाऽनुरूपं।
काव्यं मयाऽत्र निहितं, न परस्य किंचित्।
किं सेव्यते ? सुमनसां मनसाऽपि गन्धः।
कस्तूरिका जनन शक्तिभृता मृगेण॥

षाजहानः - कवे ! किं भवा नाऽनुवंश्योऽस्ति विद्वत्कुटुम्बस्य ?

जगन्नाथः - अथ किं महाराज !

श्लो॥ पाषाणा दपि पीयूषं स्यन्दते यस्य लीलया।
तं वन्दे "पेरुभट्टा"ऽऽख्यं लक्ष्मीकान्तं महागुरुम्॥

षाजहानः - नाम .... पित्र्यं विद्याधन मपि लब्धवा नस्ति भवान्। अपि रचितानि कान्यऽपि रस पुष्पानि काव्यानि ?

जगन्नाथः "रस गङ्गाधर" इति

षाजहानः - किमपि प्रतिज्ञातं तत्र ?

जगन्नाथः - देव ! एव मेव।

श्लो॥ "रसगङ्गाधर" नामा सन्दर्भोऽयं चिरं जयतु
किं च कवीनां कुलानि निसर्गसम्यग्धि रञ्जयतु॥ इति।

सभासदः - साधु जगन्नाथकवे ! साधु।

... ... ...

लवङ्गी - (आत्मगतम्) किं मयं महीसुर कुमारः ? .... अथवा ? *माहिर कुमारः।
*(खदिरो माहिरो दाल्मिः। वैजयन्ती)

स्निग्धेनाऽऽकारेण दिग्भ्रमं जनयति गम्भीरेण कण्ठरवेण मानस मुत्तेजयति । वेषेण निष्ठितो वचनेन तेजितश्च । कथ मिव .... एन मवलोकयन्त्या मे हृदयफलके "रणरणक" मुद्भवतीव .... कि महं करोमि ? .... एवं करोमि । (गमनसूचना)

(अट्टालिकाया मग्रत उपविष्टां महारज्ञीं प्रति गत्वा)

देवि ! पुन रेकवार मन्तःपुर जन परिमितायां सभायां कवि वरायाऽस्मै समयं परिकल्प्य तदीयायां कविता शबलता कलितायां गोष्ठ्यां काव्याऽऽलापविनोदेन यापयामो वा? कालम् ।

महारज्ञी - सोऽय मेव मा मुद्बोधयति भावः । त दर्थं प्रेषयामि चेटीम् ।

चेटी - (पदचलनं, गमन सूचना च)

(वेत्रहस्तं प्रति, वेत्रहस्तो महामन्त्रिणं प्रति महामन्त्री चक्रवर्तिनं प्रति च श्रावयति वार्ताम् )

(पटह ध्वनि र्भवति )

षाजहानः - समुत्तिष्ठति सभासदश्च समुत्तिष्ठन्ति)

(यवनिकायाः पातन मुत्थापनं च)

## 3

जगन्नाथः - (अन्तःपुरं प्रविशति काजीकविना सह)

लवङ्गी : (अभ्यागमनाऽभिवादनेन स्वागतं ब्रूते काजीकवये ।)

काजीकविः - (लवङ्गीं दर्शयन् ) (जगन्नाथंप्रति) इयं कुमारी यवनभाषाभूषा परं च, कवितालताङ्गी नाम्ना लवङ्गी ।

लवङ्गी - (अर्धभाग मावृतेन मुखाऽवगुण्ठनेन कमनीयं यथा तथा कनीनिके लोलयित्वा प्रणामसूचनार्थ मिव ईष न्नमयति शिरो जगन्नाथं प्रति)

जगन्नाथः - स्मितं कृत्वा) "विनाऽऽश्रयं न शं भन्ते पण्डिता वनिता लताः"
(हस्त मुद्धृत्य) वांछितं वर माप्नुयाः ।

लवङ्गी - (स्मितमुखी (आत्मगतम्) वांछितो वर स्त्वमेव ।

काजीकविः - कवे ! "रसगङ्गाधर" विषय विवरणेन ...

जगन्नाथः - युज्यते । (तद्ग्रन्थ रचनाऽवसर मुक्त्वा)
(लवङ्गी वदनाऽम्बुज विलोकन विवशः)

श्लो ॥ त न्मंजु मन्द हसितं श्वशितानि तानि ।
सा वै कलङ्कविधुरा मधुराऽऽनन श्रीः ।
अद्याऽपि मा मुन्मदयन्ति हन्त ।
सायन्तनाऽम्बुज सहोदर लोचनायाः ॥

लवङ्गी - (आत्मगतम्) शृङ्गार रसस्य .... आयतनं खलु ! ... अलमयं सनातनः । (घण्टा नादो भवति)

काजीकविः : (महाराज्ञी पक्षतो घन कनक वस्तूनि ददाति कविराय)
(गमनसूचना)

(यवनिकायाः पातन मुत्थापनं च)

# 4

लवङ्गी - (भ्रमणाऽऽसनोपविष्टा) **एकान्ते**

संस्कार मण्डित स्स पण्डित स्सततं मम मनोमन्दिरे विहरतीव । कि मिदम् ? कथमिदम् ? सवन हवन, कवनाऽन्वया दागत स्सः । यत्राऽहं "यवन" वंशा दागता । तथा भूते ...

आवयो स्समागमो मृग तृष्णिकायां दाहाऽऽर्ति प्रशमन मेव वा ? किं वा ?

(ओष्ठयो स्तर्जनीं निक्षिप्य)

नोचे दियं वांछा आशा निराशयो र्मध्ये लीला क्रियैव वा ?
किं वा ? (सन्दिहाना)

अथवा आशा कलिका विकसिता परिमळिता च भवति वा ?
किं वा ? काल निर्णयं निरीक्षे काम निश्चयं प्रतीक्षे ।

(भवति घण्टानादः) (अन्तर्याति)

(यवनिकायाः पातन मुत्थापनं च)

# 5

जगन्नाथः - (गृहे चलन् चर न्नितस्ततः) (एकान्ते) "लवङ्गी" इत्यक्षरत्रयं हरति तापत्रयम् । तापत्रयं हरति "लवङ्गी" इत्यक्षरत्रयम् । किं सा योषा यवनकुल भूषा ? बला दिव नियोजितः सर्वत्र पश्यामि ता मेव । कि मिदं ? .... कोवाऽहम् ? का वा सा ?

(नि:श्वस्य) सनातन सम्मानित सदाचार सम्प्रदायः क्वाऽहम् ?
क्व वा ? यवनी वनी विलास कुरङ्गी लवङ्गी।
(दीर्घं निश्वस्य) (हस्ताऽग्रे विपुलीकृत्य)
अन्तर मनन्तं । कथ मिव? विस्मृताऽपि स्मृता भवति सा । युज्यते

**' बलवा निन्द्रिय ग्रामो विद्वांस मपि कर्षति''**
**इति मनुवचनं बलवद्वचन मेव ···**
**''मन एव मनुष्याणां" ··· हा ! ''मन''** इति वा?
कुत्राऽस्ति ? (स्वं विलोकयन् ) ··· अत्र नाऽस्ति ।
तत्र ··· प्रियाया मनोमन्दिरे, आम । (उच्चकैः)

**मा मञ्चर मनः-पान्थ ! तत्राऽऽस्ते स्मर तस्करः ··**

मनश्शब्दः पुंलिंगे वा नपुंसक लिंगे वा ? वर्तते ···
''नपुंसक'' लिङ्ग एव । अत एव खलु ' प्रेषितं प्रियां प्रति
तथाऽपि तत् रमते तत्रैव । कि महं करोमि ?

**श्लो ।। ''नपुंसक'' मिति ज्ञात्वा प्रियायै प्रेषितं मनः ।**
**.... ··· त त्तु तत्रैव रमते ।**
**... ··· (पुनः) त त्तु, तत्रैव रमते ।**
निस्पृहं विहस्य) **हताः पाणिनिना वयम् ।।**

चेती - (द्वारे स्थित्वा) महाकवे ! नमः ।

जगन्नाथः - (परध्यानेन) ''नम'' इति किम् ? मनः परिवर्तित मिव नम इति ।
किं वा ? कामी स्वतां पश्यति ।

(किमपि पुस्तकं परिशील्य निक्षिप्य)

श्लो ॥ "पुं" लिङ्गेनोच्यते स्त्री च "पुंत्र" च्छक्तिमती क्वचि ।

दिति मध्व भाष्य वचनं "मध्वाम्र" मिव मधुरम् । परं च, मदीये प्रस्तुते प्रकरणे समुचितम् । नोचे त्कि मिदम् ? कोवाऽहम् ? का वा सा ? सङ्कल्पते मनः । निश्चि नोति बुद्धिः । किं कर्तव्यम् ? ...

चेती - (उच्चैः) महाकवे ! नमः ।

जगन्नाथः - (श्रुति मभिनीय) को नु खलु !

चेटी - महाकवे ! नमः । अह मन्तःपुरे चेटी ।

जगन्नाथः - (आगत्य) को वा विशेषः ?

चेटी - अद्य .... .... चक्रवर्तिनो जन्मदिन मिति देवेन प्रेषित मिद मुपायनं स्वीकरोतु भवान् ।

जगन्नाथः - सादरं गृहीत मिति भण ।

चेटी - अस्तमयाऽनन्तरं नाट्यमयूरी निरूपितस्य चाक्षुषक्रतोः प्रयोग श्च ।

जगन्नाथः - मनसि निहितो विषयः ।

चेटी - (व्यंग्येन) पुन रिय मभिनवा स्वयं लवङ्गीकुमारी पल्लवितांगुळि बिलुलिता वर कुन्द माला । (गमनसूचना)

(यवनिकायाः पातन मुत्थापनं च)

# 6

जगन्नाथः - (मालां गृहीत्वा)

अये ! कुन्दमाले ! लवङ्गी कुमार्याः करकमलाभ्यां स्वयं संग्रथिता ... सत्यं ... वरमाला ... खल्वसि ।

(मालां कण्ठे धृत्वा)

"अपयोधर संसर्गां प्रियालिङ्गन निर्वृति" मनुभवामि ।

(तावत् कस्यापि ताळपत्रस्य पतनम् ।)

(गृहीत्वा) यवन लिपि विलिखित मिवेदं पत्रम् । नैव । देवनागर्या मेव ।अक्षराण्यस्पष्टानि । भवतु नाम, पठितुं यते । ... ...

"मेघाऽऽलोके शिखिनी केका ।
चन्द्राऽऽलोके चित्रा रेखा"

एवं

"लवङ्गस्य स्त्री"

(सन्देहेन) किं मिदम् ? को वा भावः ?

"लवङ्गस्य स्त्री" इति किम् ? ••• "लवङ्गी" इति वा ?

असाधु वा ? साधु वा ? पदं समयोचितं चमत्कृति विलसितं च ।

(विहस्य, संचुब्याऽऽलिंग्य च ताळपत्रम् )

श्लो ॥ नवनीत समा कमनीय तमा ।
"उहिऊहि " वचोऽमृत पूर्ण मुखी ॥
तादृशी ... तादृग्विधा ...

श्लो ॥ हरिणी प्रेक्षणा यत्र गृहिणी न विलोक्यते ।
सेवितं सर्व सम्पद्भि रपि, तद्भवनं वनम् ॥

भवतु नाम, चक्रवर्तिनो "जन्मदिन" महोत्सव समय स्समासन्न इव । गच्छामि तत्रैव । (गमन सूचना)

(यवनिकायाः पातन मुत्थापनं च ।)

# 7

षाजहानः - स्वागत मनर्घाऽतिथये !

जगन्नाथः - "धर्मचक्र" रक्षणार्थं मवलोकयतु भवान् वसन्तानां शतम् ।

षाजहानः - धन्योऽह मस्मि । महाश्चैत्री खल्वद्य । नेत्रोत्सवो भवतु, अभिनय विशेषः कश्चन ।

(उचितेष्वासनेषु समुपविशन्ति सर्वे ।)

—: गेयम् :—

एह्येहि

माधव प्रभो !

कुसुम शराऽऽसन !

सुम शर! मधो !

.... .... .... ....

मंजुल मधुकर

झंकृति बोधित !

कोकिल कलरव

रवणे मोहित !

अङ्गना प्रिय

मृदु पल्लव बाणं

मल्लिका कुसुम

विलसित चापं

धेहि च प्रणयिषु

शिथिलय धैर्यं

प्रेरय प्रणयिजनेऽ

नुरागम् ।

एह्येहि

माधव प्रभो !

यवनिकायाः पातन मुत्थापनं च)

# 8

जगन्नाथः - (कस्मिंश्चि दुपवने प्रियां लवङ्गीं प्रति)
प्रिये ! एहि विना भवबन्ध मविनाभाव बन्धेन ...अषडक्षीणेऽस्मि-न्नारामे रमामहे ।

लवङ्गी - (साभिप्रायम् ) पुरुषा, आत्मैककार्याऽऽयत्ताः खलु !

जगन्नाथः - "स्त्रीणा मशिक्षित पटुत्व माजन्मसिद्ध" मिति वचनं निरूपयसि रूढीकरोषि च ।

लवङ्गी - परभृत वचन मनन मनीषिन् ! .... त तथाऽस्तु । कथं संपन्नो भव त्यावयोः प्रणयः ।

जगन्नाथः - कथ ममम्पन्नं भवत्यावयोः प्रेम ? वद ... अहं चान्द्रः तथैव त्व मसि चान्द्री ।

लवङ्गी - रसनां चालयित्वा) ताव न्मात्रेणैव, अलं भवति वा ?

जगन्नाथः -

श्लो ॥ वचने तव यत्र माधुरी सा ।
हृदि पूर्णा करुणा च कोमलेऽभूत् ।
अधुना हरिणाक्षि ! हा ! कथं वा ।
कटुता तत्र कठोरताऽऽवि रासीत् ॥

(लवंग्या शिशरसि हस्तं निक्षिप्य) विश्वसिहि मम वचनम् ।

लवङ्गी - वय महो! महोमदीयाः भवां स्तु महावेदीयः ।

जगन्नाथः - अहमपि *"महो मदीय" इति महोमदीयः । परं च,आवा मुभावपि कविकुला दागतौ खलु।

(एकवार मुभावपि कुरुत, अट्टहासम् )

लवङ्गी - (सावेशम् ) पान्थ पण्डित ! त्व मसि तृषितः ।

श्लो ॥ क्व वयं ? यवनाऽन्वयोद्भवाः ।
क्व च विद्वज्जन वंशजो भवान् ।
सरसी सदृशी मवेक्ष्य मां
तृषितः पान्थ इवाऽसि पण्डित !

जगन्नाथः - सत्यं वच्मि। इतर जन साधारण धिया मा मन्वीथाः ।

(कपोल तले गल्ल चपेटं दत्वा ।)

— : युगळ गीतम् : —

याहि तरु तति
लवली कक्षां
देहि प्रणयिने
प्रेम भिक्षां

---

* मह उद्धव उत्सवः= नित्योत्सवा महम्मदीयाः= अतो महो मदीयाः । तथैव, अहमपि नित्योत्सव निरत इत्यर्थे ।

लवङ्गी – पाहि ममाऽऽश्रय
मादिश प्रेमिन् !
विषम सुमेषो
सुन्दर कामिन् !

जगन्नाथः – भिन्धि भामे !
रमणोऽहं ते
अधरोष्ठेऽमृत
मसकृ ल्लिप्से

लवङ्गी – छिन्धि कान्त !
त्वयि मयि भेदं
प्रेमाऽऽरामे
प्रणयोदन्ते

जगन्नाथः – याहि तरु तति
लवली कक्षां
देहि प्रणयिने
प्रेम भिक्षाम् ॥

(यवनिकायाः पातन मुत्थापनं च)

# 9

(राजाऽऽस्थानम् । जगन्नाथ कवि सम्मान सभा । उत्कंठितै
स्सदस्यै रुत्कटं भवतिमञ्जीर मन्दिरम् )

महामन्त्री - महाशया स्सदस्याः !

अद्याऽत्र जगन्नाथ कविं सम्भावयितुं समवेता वयं । जगन्नाथोऽयं न केवलं कवि रथवा पंडितः । कवि पंडित मित्र मिदं विद्वद्रत्नम् ।

अत स्सुवर्ण फलके "पंडित राज" इति बिरुद विशेषेण नव रत्न खचिता मक्षर पंक्ति कारयित्वा पाणि पल्लवाभ्यां स्वयं कवये बहूकर्तु मुत्सुकते धर्मवर्ती चक्रवर्ती ।

सदस्याः - वर्धता मतिशयेन वर्धतां चक्रवर्ती ।

चक्रवर्ती - (सिंहासना दुत्थाय, कविचन्द्रमः !

चन्दन ताम्बूल सहित मिदं सुवर्ण फलकं स्वीकरोतु भवान् ।
(समर्पण सूचना)

जगन्नाथः - अत्यन्त मनुगृहीतोऽस्मि ।

काजीकविः - इष्टदेवता प्रार्थना पूर्वक मुत्तरं दास्यति महाकविः ।

जगन्नाथः -

श्लो ॥ मृद्वीका रसिता सिता समशिता
पीतं निपीतं पयः ।

स्व यानेन सुधाऽप्यधायि कतिथा
रम्भाऽधरः खण्डितः ।
तत्वं ब्रूहि मदीयजीव! भवता भूयो
भवे भ्राम्यता ।
कृष्णेत्यक्षरयो रयं मधुरिमोद्गारः
क्वचि ल्लक्षितः ॥

सभ्याः साधु पंडितराज ! साधु !

जगन्नाथः - श्लो ॥ स्मृताऽपि तरुणाऽऽतपं
करुणया हरन्ती नृणा ।
मभंगुर तनु त्विषां वलयिता
शतै र्विद्युताम् ।
कलिन्द गिरि नन्दिनी
तट सुर द्रुमाऽऽलम्बिनी ।
मदीय मतिचुम्बिनी

सभास्ताराः - समीचीन मस्ति । धारा शुद्धि कलिता कवेः कविता ।

जगन्नाथः - मदीय मति चुम्बिनी
भवतु काऽपि कादम्बिनी ॥

सभास्ताराः - (मंदिरं प्रतिध्वनितं यथा तथा कुर्वन्ति करतालध्वनिम् )

चक्रवर्ती - इष्टदेवता प्रार्थनाया मेव संवृत्तोऽयं कवि रस्माक मिष्टः । त
दभीष्टं किमपि पूरयामः ।

जगन्नाथः - (आवेशेनाऽऽविष्ट इव)

(चक्रवर्तिनं प्रति) दान शौण्डीर ।

श्लो ॥ न याचे हिन्दूकं पर्वणि पर्वणि प्रदत्त डम्बूकम् ।
याचेऽहं "मौग"लमल्लूकं तृणीकृत स्वर्ण *सन्दूकम् ॥

*(हिन्द्यां = सन्दूका)

देव ! हृदय दयितं वस्तु ... केवलं त्र्यक्षर मेव । ...

.... अक्षर त्रय परिमित मेव ।

दीयताम् ... दयितं ... द - - द - - - दयिताम् ।

चक्रवर्ती - (भृकुटिं कृत्वा) कथं दयिता मिति का वा "दयिता"?

जगन्नाथः - श्लो ॥ न याचे गजाऽऽलिं न वा वाजिराजिम् ।
न वित्तेषु चित्तं मदीयं कदाऽपि

(सैणे स्थिता मग्रतो लवङ्गीं लक्षीकृत्य)

इयं सुस्तनी मस्तक न्यस्त हस्ता -
"लवङ्गी" कुरङ्गी द गङ्गीकरोतु ॥

(पारवश्येन)

श्लो ॥ यवनी नवनीत कोमलाऽङ्गी ।
शयनीये यदि नीयते कदाचित् ।
अवनीतल मेव साधु मन्ये !
न वनी माघवनी विनोद हेतुः ॥

वृद्ध सभ्याः - (उच्चैः) अनुचितः कवेः प्रस्तावः ।

युवसभ्याः - समुचित एव कवेः प्रस्तावः ।

चक्रवर्ती - (कुपितः) वेत्रहस्त ! मन्दिरस्य मार्गं दर्शय ।

(गच्छति राजा, आस्थानात् सभ्याश्च गच्छन्ति)

(यवनिकायाः पातन मुत्थापनं च)

# 10

चक्रवर्ती - आर्य ! गोपाल मिश्र ! भवान्यह मतीव व्याकुल स्तदानीं जगन्नाथ चेष्टितस्य स्मरण कारणेन। किं वा क्रियतां नाम मया?

गोपालमिश्रः - देव ! भवा नस्ति भारत चक्रवर्ती । स भवति भारती वशवर्ती ।

चक्रवर्ती - त त्तथाऽस्तु । .... ता मुद्दिश्य ।

गोपालमिश्रः - जगन्नाथो भाषा सनाथः साऽपि भाषा लताङ्गी । अत उभा वपि विवेकवर्धिनी वनी विहरिणौ ।

चक्रवती - एकतो मतवैषम्य मपरतो राजकीय कालुष्यं च । अतस्तयो राजधानी सीमाया निष्कासन मेव ...
सद्यःकाल रसायन मिति मन्वे ।

गोपालमिश्रः - तत्राऽपि ...

चक्रवर्ती - युज्यते । किं तु, पुरोनेतं विपक्ष विमर्श विमर्दो न भवति खलु !

गोपालमिश्रः - श्रुत मस्ति, काशी नगरे शाश्वत मावासं चिकीर्षतीति ।

चक्रवर्ती - समुचितो निर्णयः ।

गोपालमिश्रः - देव! तत्राऽपि .. अनिष्ट पण्डितानां रभसाऽऽचरितं भवे च्चेत् ...

चक्रवर्ती - जागरूका भवामः। काशी पत्तनस्य ... अपरं नाम .... आनन्द वन मिति ननु! विशिष्य महा पण्डित मण्डितं च।

(शङ्खध्वनि र्भवति)

(उत्तिष्ठति वराऽऽसना च्चक्रवर्ती।)

(यवनिकायाः पातन मुत्थापनं च।)

# 11

(काशी पत्तने)

शङ्कर भट्टः - रामकिशोराऽऽर्य! कि मियं वार्ता श्रुता?

रामकिशोरः - का वा वार्ता?

शङ्करभट्टः - आन्ध्रदेशा दागतः किल "जगन्नाथ" इति कश्चन पण्डितो "दिल्ली" नगरीं प्रति। तत्र षाजहान चक्रवर्तिना "पण्डितराज" इति बिरुद विशेष दानेन सत्कृतो वसन् ...

रामकिशोरः - "वसन्" ... किमिति? ... हसन् ... कालं यापयति वा?

शङ्करभट्टः - युज्यते। हसति हासयति च। का मपि ... आस्थान तरुणीं यवनीम्। तथैव ह्रासयति च पंडित गौरवम्।

रामकिशोरः - नाम ... तस्या मनुरक्तोऽभू दिति वा?

शङ्करभट्टः - अथ किम्? पुन रिद मपि ... काशीपुरीं पावयितु मिदानी मत्राऽऽगतः किल?

रामकिशोरः - श्रोत्रे पिधाय) हन्त! अत्राऽऽगतो वा? किं तेन? यवनी संसर्गदूषितेन पण्डितेन? सम्भाषण मपि निषिध्यतां नाम।

शङ्करभट्टः - तेनैवोच्यते।

"शास्त्राण्याऽऽकलितानि नित्यविधय
स्सर्वेऽपि सम्भाविता" इति।

अन्यत्र

'दिल्ली वल्लभ पाणि पल्लव तले नीतं नवीनं वय" इति

पुन रपरत्र

संप्रत्यन्धक शासनस्य नगरे तत्वं परं चिन्त्यते" इति।

रामकिशोरः - (दन्तान् पटपटाकृत्य) कीदृशं तत्वं चिन्तयति किल! प्रेम तत्वं वा? जाति भ्रष्टः "आचार हीनं न पुनाति धर्मः"

शङ्करभट्टः - कथ मिम? रामकिशोराऽऽर्य! महाकविं तथा भर्त्सयति भवान्? तदीय शिष्या स्तत्र तत्र चर्चा गोष्ठी र्निवाह्य, तदीय ग्रन्थाऽन्तर्गत साहित्य गन्ध वैभव सौरभं संविभागयन्ति बहुल।

पुन रपरो विशेषोऽस्ति - "रसगङ्गाधर" इत्यपूर्व मलङ्कार ग्रन्थं रचितवान् किल! सः।

रामकिशोरः - (शान्तात्मा)

अहमालङ्कारिकोऽस्मीति तस्मिन् मे पक्षपातः

शंकरभट्टः - वेदान्त शास्त्रस्याऽपि पारदृश्वा, अत एव

श्लो ॥ निखिलं जग देव नश्वरं
पुनरस्मिन् नितगं कलेबरम् ।
अथ तस्य कृते क्रिया नयं ?
क्रियते हन्त ! मया परिश्रमः ॥

इति भणति ।

रामकिशोरः - अहह ! कर्णाऽऽभरणं भवतीदं श्लोक रत्नम् । किन्तु, क्षुद्रेऽस्मि न्निन्द्रिय व्यापारे भवति समुत्सुक इति क्षुभ्यति मे मतिः ।

शंकरभट्टः - पुन रेवं च, प्रतिजानाति जगन्नाथः ।
"ध्रुवं ते जीवन्तोऽप्यहह ! मृतका मन्दमतयो
न, येषा मानन्दं जनयति जगन्नाथ फणिति" रिति

रामकिशोरः - समर्थः पण्डितः खलु ! प्रभवति तथा प्रतिज्ञातुम् ।

शंकरभट्टः - उत्तिष्ठत समुत्तिष्ठत, स्नान समयाऽत्येतीव । ... तत्र गुरुपादा श्चाऽऽगच्छन्ति सह शिष्यैः । .. इय मेव सोपान पंक्ति रवतरत । तिष्ठत तिष्ठत तत्र विशेषः कोवा ? गुरुपादा श्च गच्छन्त एव स्थिताः । ...

पुनश्च जन समूहोऽप्यस्ति तत्र । आगच्छत तत्रैव गच्छावः ।

(गमन सूचना)

(यवनिकायाः पातन मुत्थापनं च)

# 12

जगन्नाथः - (मद्यं सेवित इव)

अये ललिताऽङ्गि ! लवङ्गि !

**श्लो ॥ मधु रसा न्मधुरं तवाऽधरं**
**तरुणि ... त ... रुणि !**
**म द्वदने वि .... (उच्चैः) निवेशय ।**

अप्पय्य दीक्षितः - (आगत्य स्थितः)

जगन्नाथः - (उच्चै स्स्वरेण)

अये ! प्रिये !

**श्लो ॥ मम गृहाण करेण**
**कराम्बुजम् ।**
**प ... प .... पता ... पतामि**
**भूतले ॥**

अप्पय्यदीक्षितः - (साऽऽक्षेपम् )

को नु खल्वयं मद्यं पीत्वा पद्यं पठति ? परं चाऽस्य कविता सहजा प्रसादगुणोपेता च ... को नु खल्वयम् ?

शंकरभट्टः - गुरुदेव !

अय मेवाऽय मेव ... यवनी संसर्ग दूषितः पंडितः ।

अप्पय्यदीक्षितः - हं ! अय मेव वा ? पंडित खण्डितः पंडितः ?

(निस्पृहं हसित्वा)

श्लो ॥ निश्शङ्कं शेषे,

शेषे वयसि त्व

मागते मृत्यौ

अथवा, सुखं शयीथा

निकटे जागर्ति जाह्नवी ॥

जगन्नाथः - (त द्वचन श्रवणेन कशाऽऽघातेन ताडित इव हठा दुत्थाय)
को वा सः पंडितः ? कोवा यवनी संसर्ग दूषितः ?

लवङ्गी - (समुत्थाय दीनवदना)

अहं यवनी वा ? रमणी वा ?
(स्थित्वा उरसि निक्षिप्य हस्तं) यदि मदीयः प्रणयः पंडित राजं प्रति निर्व्याजः, यदि, मदीयं चरितं कलङ्क रहितं,
पापिनीना मपि पावनि । (उच्चैः) गङ्गाभवानि !

श्लो ॥ सन्तरन्ति निज पुण्यै ।

स्तव किं ते महत्वम् ।

य, दिह यवनकन्यां ।

पापिनीं मां पुनीहि ॥

जगन्नाथः - (ताव देव गङ्गां प्रविश्य स्नात्वा शुचि राचम्य)
यद्यहं, हयाऽऽनन स्मरण लङ्घित वाङ्मयाम्बुधिः,
यदि मदीयो "रसगङ्गाधरः" भवति नव रस गङ्गाधर स्समुल्लल त्समुल्लस तरङ्गे गङ्गे !

गङ्गादेवि एहि शीघ्र मेहि ।

(लवङ्गीं दर्शयन्)

श्लो ॥ जडा नन्धान् प्रकृति बधिरान् ।
ग्रह ग्रस्ता नस्ताऽखिल दुरित निस्सार सरणीन् ।
निलिम्पै र्निर्मुक्ता नपि च निरयाऽन्त र्निपततो ।
नरा नम्ब ! त्रातुं त्व मिह परमं भेषज मसि ॥

कल्मष हारिणि ! स्ववाहिनि !

श्लो ॥ बधान द्रा गेव द्रढिम रमणीयं परिकरं
किरीटे बालेन्दुं निगमय पुनः पन्नगगणैः
न कुर्या स्त्वं हेला मितर जन साधारण धिया ।

जगन्नाथस्याऽयं । (उच्चकैः)

जगन्नाथस्याऽयं सुरधुनि समुद्धार समयः ॥

(तावदेव गङ्गा प्रवाह जलस्य सोपाना त्सोपान मतिक्रमण मेकवार मेकप्रायं लवङ्गी जगन्नाथयो रन्त र्नयन मुधृत वीचिकाया विजृम्भणेन)

शंकरभट्टः - अहो ! अंहो !

भक्तिपरवशता पंडितराजस्य जगन्नाथस्य ।

अप्पय्यदीक्षितः - हन्त ! भक्त परवशता सुरपति सेव्याया जाह्नव्याः ।

एतावत्कालं बुधोऽयं जगन्नाथ "विबुध" इदानीं संवृत्त, इति त, देव मस्तु ।

॥ भरतवाक्यम् ॥

श्लो ॥ प्रजास्वाम्य प्रभुत्वेऽस्मिन् ।
प्रजाना मस्तु सुस्थितिः ।
सत्याऽहिंसा द्विधाराऽसि ।
मन्त्रिसिंहः प्रशास्तु वः ॥

EPILOGUE

In this great seat of Democracy may the lives
of the people be happy and prosperous
May our beloved Prime Minister win many
more laurels of Victory weilding the
double-edged weapon of Truth and Love.

—AMARENDRA